# ॥ श्रीशरभसहस्रनामस्तोत्रम् ॥

श्रीगणेशाय नमः ।
श्रीदेव्युवाच ।
देवदेव महादेव भक्तानुग्रहकारकः ।
दुर्ल्लभा शारभी विद्या गुह्याद्गुह्यतरापरा ॥ १॥

गुटिका पादुका सिद्धिस्तथासिद्धिश्च खेचरी ।
शापानुग्रहसामर्थ्यापरकायाप्रवेशने ॥ २॥

सद्यः प्रत्यक्षकामार्थकेनसेव्याः सुरासुरैः ।
श्रीशिव उवाच ।
लक्षवारसहस्राणि वारितासि पुनःपुनः ॥ ३॥

स्त्रीस्वभावान्महादेवि पुनस्त्वं परिपृच्छसि ।
महागुह्यं महागोप्यं वाञ्छाचिन्तामणि स्मृतम् ॥ ४॥

न वक्तव्यं त्वयादेवि शापितासिममोपरि ।
सर्वसिद्धिप्रदः साक्षात् शरभः परमेश्वरः ॥ ५॥

तस्यनामसहस्राणि तवस्नेहाद्ददामिते ।
श्रुणुचैकमनाभूत्वा सावधानावधारय ॥ ६॥

ब्रह्माविष्णुश्चरुद्रश्चईशकर्ताहमव्ययः ।
मोहनस्तम्भनाकर्षमारणोच्चाटनक्षमः ॥ ७॥

सिद्धिप्रदमसिद्धानां ज्ञानिनां ज्ञानसिद्धिदम् ।
मोक्षप्रदं मुमुक्षुणां नान्यथा शृणुसादरे ॥ ८॥

वन्ध्या वा काकवन्ध्या वा सद्यः पुत्रप्रदः स्त्रियां ।
सर्वशक्तियुतोदाता दयावान्शरभेश्वरः ॥ ९॥

तस्यनामसहस्राणिकथयासि तव प्रिये ।
ॐअस्यश्रीशरभसहस्रनामस्तोत्रमहामन्त्रस्य ,
श्रीभगवान्कालाग्निरुद्रऋषिः ,विराट्छन्दः ,
श्रीशरभेश्वरपक्षिराजो देवता , ॐ खं बीजं ,
स्वाहा शक्तिः , फट् इति कीलकं ,
मम धर्मार्थकाममोक्षार्थे जपे विनियोगः ,

ॐ भूर्भुवःस्वरोमितिदिग्बन्धः ॥

अथ ध्यानम् ।
चन्द्रार्कौवह्निदृष्टिः कुलिशवरनखश्चञ्चलात्युग्रजिह्वः
कालीदुर्गाचपक्षौहृदयजठरगोभैरवोवाडग्निः ।
उरूस्थौव्याधिमृत्युशरभवरखगःश्चण्डवातातिवेगः
संहर्तासर्वशत्रुन्सजयतिशरभःसालुवःपक्षिराजः ॥

मृगस्त्वर्द्धशरीरेणपक्षाभ्यां चञ्चुनाद्विजः
अधोवक्त्र चतुश्पादरुर्ध्ववक्त्र चतुर्भुजः
कालान्तदहनोपम्योनीलजीमूतिनिःस्वनः ।
अरिस्तद्दर्शनादेव विनष्टबलविक्रमः
सटाछाटोग्रतुण्डायपक्षविक्षिप्तभूभृते
अष्टपादायरुद्राय नमः शरभमूर्तये ॥

ॐ श्रीं श्रीं सिद्धिश्वरः साक्षात् खें खें गर्वापहारकः ।
ह्रीं ह्रीं स्प्रें स्फ्रें ह्सौं ह्सौं ज्लूं ज्लूं पक्षिराजः प्रतापवान् ॥ १॥

ह्रौं शिवायगिरीशायतारःसंसारपारगः ।
गतिदोमतिदः श्रीशः क्लीं क्लीं कामकलाधरः ॥ २॥

सिद्धिदः शरभो योगी स्प्रौं शिवः सिद्धिदायकः ।
सर्वकल्मषहर्त्ताच क्रीं क्रीं कालकलाधरः ॥ ३॥

प्रीं प्रीं पीताम्बरधरो भस्मोद्धूलित विग्रहः ।
व्रीं व्रीं विष्णु समाराध्यः सालुवः शक्तिमान्प्रभुः ॥ ४॥

वीरवीराङ्गणाराध्यो हूं हूं सङ्कष्टखण्डनः ।
शङ्करः शङ्कराराध्यो श्रां श्रीं श्रूं शरभेश्वरः ॥ ५॥

ग्रीं ग्रीं गणपतिः सेव्यो पक्षिराजो महाभुजः ।
ऐं श्रीं ह्रां ह्रीं ह्सौं ह्रीं क्लीं परमात्मासुरेश्वरः ॥ ६॥

स्वाहा श्रीदो महावीरो सर्वःसर्वै नमस्कृतः ।
ऐं क्लीं सौं ह्रौं ह्स्फ्रें ह्रैं खैं श्रैं ह्रैं परमेश्वरः ॥ ७॥

स्वाहा विद्यानिधान श्रीवामदेवः प्रतापवान् ।
ऐं ऐं वागीश्वरो देवो ह्रैं क्रैं त्रैं रक्षकः शिवः ॥ ८॥

ह्रीं फट् स्वाहा व्याघ्रचौरोनासनः सिद्धिसंयुतः ।
ब्रह्माविष्णुशिवाराध्यः ह्रीं शिवाप्राणवल्लभः ॥ ९॥

भ्रैं भ्रीं भस्मेश्वरीयुक्ता मृं मृं मृत्यु जयङ्करः ।
विश्वम्भरो विश्वकर्ता विश्वभर्ता गुरोर्गुरुः ॥ १०॥

क्लैं ह्रीं स्वाहा कीर्तियुक्तो ईश्वरः सकलार्थदः ।
गौरी गिरा महालक्ष्मी ह्रीं ऐं श्रीं नित्यमर्चिता ॥ ११॥

ह्लीं ह्लीं स्वाहाशिवः शम्भोवाचं वाचमगोचरः ।
ब्रह्मण्यो ब्रह्मकृद्ब्रह्म ज्रों ज्रौं जाग्रन्महेश्वरः ॥ १२॥

ह्रौं ह्रौं स्वाहा धौतपापः शान्तात्मा शङ्करः खगः ।
पक्षीन्द्रो पक्षिराजश्च भक्तपक्षकरः परः ॥ १३॥

उत्कृष्टोत्कृष्ट कर्तात्मा श्रीं विश्वात्मा विभावस्सुः ।
क्रीं खीं खीं सुमुखानन्दो घ्रौं ख्रौं म्रौं प्रौं सनातनः ॥ १४॥

ऐं स्वाहा श्रीमहादेवो सृष्टिस्थितिलयङ्करः ।
उग्रतारो महातारो वीरतारो ज्वलोज्वलः ॥ १५॥

श्रीं ह्लीं क्रैं ज्लूं हसौं स्वाहा पार्वतीशः परात्परः ॥ १६॥

वरदः साधकानाञ्च राजावश्यं प्रजावशी ।
रैं रैं ध्रैं ध्रैं धराभारो हर्ता कर्ता धुरोधसः ॥ १७॥

वेदमन्त्रार्थ गूढात्मा शास्त्र मन्त्रार्थ सम्मतः ।
क्रीं स्वाहा परमोदाता ॐ ॐ निर्वाणसम्पदः ॥ १८॥

क्लौं प्लौं हूं हूं शिवास्वाहा राज्यभोगसुखप्रदः ।
सर्वसौभाग्य संयुक्तः रां रीं रूं रक्तलोचनः ॥ १९॥

सम्पन्नाक्षो विपन्नाक्षो ग्रां ग्रीं ज्रूं ज्वरमर्दनः ।
क्रीं ह्लीं हूं फट् पुनः स्वाहा देवदानव सेवितः ॥ २०॥

काली क्रीं ह्रीं शिवादुर्गा पक्षद्वय लसत्सुभः ।
स्वाहा मन्त्रान्वितः सत्यः सत्यः सत्य पराक्रमः ॥ २१॥

भीमो भयानको दक्षो द्रीं द्रूं दक्षमखापहः ।
रोगदोषहरः सिद्धः सिद्धिसाधनतत्परः ॥ २२॥

ह्रौं ह्रीं कालकालज्ञानी मानीदादि सुखावहः ।
ह्रीं फट् स्वाहा कविन्तर्क तर्कविद्याचरपुमान् ॥ २३॥

खर्याङ्गः खेचरी विद्या खां खीं खूं खगतेश्वरः ।
श्रीं ह्रीं स्वाहायुतो देवो राजराजो सुरेश्वरः ॥ २४॥

इच्छासिद्धिश्वरो देवो क्रियाशक्ति समन्वितः ।
आं ईं ऊं ज्ञानसंयुक्तो भगवान्सर्वसर्वजित् ॥ २५॥

ऐं फट् स्वाहा पञ्चतत्वात्पञ्चतन्मात्र सायकः ।
पञ्चकूटाष्टकूटेशौ शङ्करश्चन्द्रशेखरः ॥ २६॥

वां वीं वूं वैष्णवी विद्या श्रीं श्रीं स्वाहा धरणीधरः ।
अव्ययः सर्वकर्तात्मा शिवः कालान्तकोहरः ॥ २७॥

भूतवेतालजा बाधा शत्रुवा धारणोद्भवा ।
ख्रैं ख्रैं ह्रूं फट् पूर्णं घे घे सालुवाय प्रतापवान् ॥ २८॥

शीघ्रमारणदेवेश स्वाहा चण्डपराक्रमः ।
तीक्ष्ण नखं तीक्ष्ण दण्ष्ट्रं तीक्ष्णरूप भयङ्करः ॥ २९॥

तीव्रभक्तप्रतापोग्रं क्रैं ख्रौं स्वाहा स्वरूपकम् ।
सभाजितः सभामान्यः सभासंक्षोभकारकः ॥ ३०॥

क्ष्म्रौं ह्रौ क्ष्म्रौ ह्रौं ह्सौं ख्रौं ख्रौं सिद्धिमन्त्रनिवेशितः ।
श्रीं ह्रीं स्वाहा महादेवो आदिदेवो जगन्मयः ॥ ३१॥

सत्कर्तासत्कृतावर्तो ख्रें ख्रेङ्कारो चिदम्बरः ।
दिगम्बरो धराधीशो छ्रीं छ्रीं स्वाहा स्वरूपधृक् ॥ ३२॥

आदिविद्या जगद्विद्या क्लूं प्लूं म्लूं ह्लूं सुरोन्नतः ।
वामदक्षिणतोरूपं ह्रीं श्रीं क्लीं शङ्करोव्ययाः ॥ ३३॥

ख्रौं ख्रौं हुं हुं पुनः श्रीं श्रीं गिरिजाप्रियदर्शनः ।

स्वाहा विघ्नान्तकः सेव्यः सेवा फलप्रदायकः ॥ ३४॥

च्रीं च्रीं छ्रीं क्लीं महाछद्म छलहर्ता छलापहः ।
श्रीं ह्रीं स्वाहा शिवः शम्भो देवासुर नमस्कृतः ॥ ३५॥

कनकाङ्गदको धीरो मन्त्रतन्त्रवरप्रदः ।
मन्त्रतन्त्र पराधीनो मन्त्रतन्त्रविहारकः ॥ ३६॥

ऐं ह्रीं क्लीं मन्त्रसन्तुष्टो प्रें स्वाहा परयेश्वरः ।
विश्वव्यापीमव्ययात्मा सिद्धाचारैः सुरार्चितः ॥ ३७॥

ह्रीं श्रीं क्लीं कमलानन्दो कालकालो निरामयः ।
हौं शिवायनमः स्वाहा भवानीशो भयापहः ॥ ३८॥

ज्रीं क्लीं ज्लूं ज्लूं हस्प्रें ह्रौं ह्रां ह्रां हं सः स्वरूपकः ।
विकारहर्ता सर्वज्ञो सर्वशत्रु क्षयङ्करः ॥ ३९॥

हूं हूं स्वाहा महादेवो मुनीनां प्राणदायकः ।
स्त्रौः ह्रौं विरागी क्रोधात्मा भ्रूं भ्रूं भस्मेश्वरोहरः ॥ ४०॥

लोकपूज्योविलोमात्मा मातृकापरिचारकः ।
क्लीं त्रीं फट् श्रीं जगद्धर्ता स्वाहा विश्वम्भरोहरः ॥ ४१॥

सिद्धिदातातिरक्ताक्षो रक्तजिह्वः सहस्रपात् ।
चण्डवातादिवेगात्मा ह्रीं ह्रीं क्लीं चण्डिकार्चितः ॥ ४२॥

रुण्डमालाधरः श्रीमान् ह्रौं ह्रौं स्वाहा खिलेश्वरः ।
धनधान्यागमः कर्ता कालहर्ता महेश्वरः ॥ ४३॥

खें खें हूं फट् पुनः सौं ह्रौं क्लीं स्वाहाभूतपालकः ।
भूतात्मा परात्मा च दुःखदुष्ट दुरासदः ॥ ४४॥

सत्यसङ्कल्पकर्तात्मा भूतनाथोव्ययः शुचिः ।
ह्रीं क्रीं ह्रीं क्रीं शिवानन्दा मदिरानन्दकन्दनः ॥ ४५॥

वामविद्याविहारीच क्रीं स्वाहा यक्षतर्पितः ।
ह्रीं स्वाहा खातनुः खात्मा खैं खैं हूं फट् स्वाहा तृषापहः ॥ ४६॥

क्षुधा तृषापहारी च क्षुधातृष्णाविवर्धनः ।
निरञ्जनो निराकारो निर्विकारो धराधरः ॥ ४७॥

यन्त्रमन्त्रप्रतापोग्र परकृत्या विनाशनः ।
ह्रीं ह्रीं कृत्यकरः शम्भः परकृत्याविषापहः ॥ ४८॥

आत्मविद्याविहारीचक्षुद्रविद्याविनाशकः ।
श्रीं ग्लीं खैं फट् पुनः स्वाहा शङ्खासुरविनाशनः ॥ ४९॥

त्रां त्रं नृसिंहतेजोग्रान् ज्वलोज्ज्वलनवर्चसः ।
खौं खौं खां खां पुनः प्रें प्रें हूं फट् स्वाहा मदापहः ॥ ५०॥

गर्वगाम्भीर्यसिंहस्य नृसिंहस्य विनाशकृत् ।
गुणोदार गुणाधारो ह्रीं फ्रें शब्दपरायणः ॥ ५१॥

ऋषीणां सिद्धिकर्तात्मा श्रीं स्वाहा धनदार्चितः ।
तेजोमयः सहस्राक्षो ह्रीं स्वाहा हव्यभुक् स्वराट् ॥ ५२॥

क्लीं क्लीं क्लूं क्रैं हस्प्रें हसौं ऐश्वर्या निलोनलः ।
एकपादो द्विपादश्च बहुपादश्चचतुष्पदः ॥ ५३॥

क्रीं स्वाहा श्रीहयग्रीवो वीराराधितपादुकः ।
मारीभूत महाप्रेत वासुदेव मयोहरः ॥ ५४॥

भूतक्रीडा सुरक्रीडा क्रीडागन्धर्वकिन्नरः ।
दिव्यभोगी सुरापक्षो ह्रीं ह्रीं खां फट् परं पदः ॥ ५५॥

व्याधिहारी व्याधिहर्ता व्याधिनाशनतत्परः ।
वामी वाममार्गनिरतो सिद्ध साध्य सुसिद्धिदः ॥ ५६॥

पुष्टिदः स्तुष्टिदः स्वामी समर्थः सर्ववीर्यवान् ।
ग्लौं ग्लौं ह्रीं क्लीं हसौं श्रीं श्रीं हूं हूं स्वाहायहेश्वरः ॥ ५७॥

एहि एहि महावीरो एहि पक्षीन्द्र पक्षिराट् ।
ऐं पाण्डुवेषोभगवान्कालरूपी कलावरः ॥ ५८॥

वरिष्ठो धनदो शिष्टाविशिष्टः कुलरक्षकः ।
धर्माधिपो धर्ममूर्तिः ब्रह्म ब्रह्मविवर्द्धनः ॥ ५९॥

घां घां घां घोषनिरतो शरभः सर्वकामदः ।
फ्रैं फ्रैं श्रीं ह्लीं हसौं ह्लीं फट् पक्षीन्द्रो भगवान्हरः ॥ ६०॥

क्रौं क्रौं ह्लौं ह्लौं हसौं श्रीं ह्रीं हूं फट् शिकेवेंरः ।
शरभः कमलानन्दो उग्रोग्रः परमेश्वरः ॥ ६१॥

भू भुजङ्गमगस्तिञ्च पत्रपूजा परिग्रहः ।
मन्दारकुसुमामोदः मालतीकुसुमप्रियः ॥ ६२॥

म्लीं म्लीं श्रीं श्रीं हसौं हसौं ह्रीं ह्रीं क्लीं क्लीं इष्टार्थसिद्धिदः ।
असिताङ्गोसिताङ्गश्च पीताङ्गः परकृत्यहा ॥ ६३॥

खैं खैं स्वाहा सुरश्रेष्ठो विश्वात्मा विश्वजीवनः ।
रुरुचर्मपरीधानो रुरुभैरववन्दितः ॥ ६४॥

चण्डश्चण्डाङ्ग चण्डात्मा चञ्चचामरवीजितः ।
हौं हौं हौं पक्षिराजाय पक्षिराजाय क्रीं स्वराट् ॥ ६५॥

श्रीं श्रीं क्लीं ह्रीं हसौं स्वाहा योगीशो योगिनीप्रियः ।
कर्ता हर्ता कालातीतो कालसङ्कर्षणो घनः ॥ ६६॥

उन्मत्तोन्मत्तमर्द च भैरवोन्मन्त्रसंयुतः ।
मधुपानी मदाहारी आधारी सर्वदेहिनाम् ॥ ६७॥

मांसभक्षणकर्तात्मा विश्वरूपी महोज्ज्वलः ।
ऐश्वर्यदाता भगवान्श्री श्रीं लक्ष्म्याप्रपूजितः ॥ ६८॥

कामदेवकलारामीभिरामी शिवनर्तकी ।
महापापहरोदर्क वितर्कराज्यकृद्वशी ॥ ६९॥

श्रीं ह्लीं स्वाहेश्वरोदेवो कालीदुर्गावरप्रदः ।
कौतुकी कौतुकोयुक्तो कां कीं स्वाहा भयापहः ॥ ७०॥

महादेवो विरूपाक्षो शूलपाणिः पिनाकधृक् ।
शम्भुः पशुपतिर्दक्षो दीक्षितानाञ्जयङ्करः ॥ ७१॥

दां दां दीं दींद हौं डीं डीं डिंण्डिभा वानरः परः ।

ह्लीं स्वाहा पारगोस्वामी ढणढ़णित पातकः ॥ ७२॥

ईश्वरो ईप्सितार्थाङ्गो ईं ईं रावत मातृकः ।
हस्प्रें खफ्रें हसौं ह्लीं ह्लीं क्ष्म्रीं त्रीं श्रीं
कमलद्वयलाञ्छितः ॥ ७३॥

श्रीचक्ररक्षणोद्युक्तो त्रां त्रीं शत्रु विमर्दनः ।
गङ्गाधरो गाधमूर्ति क्ष्लूं स्वाहा सर्वसम्पदः ॥ ७४॥

हरः मृत्युहरः कर्ता विधाता विश्वतोमुखः ।
एकचक्रो द्विवक्त्रश्च त्रिवक्त्रः पञ्चवक्त्रगः ॥ ७५॥

चतुर्वक्त्रः सप्तवक्त्रोषष्टवक्त्रोष्टवक्त्रगः ।
नववक्त्रो महाधीरो ह्रीं श्रीं खें खः सहस्रकः ॥ ७६॥

दशवक्त्रो महातेजो कामिनी महाभञ्जनः ।
ज्येष्ठो श्रेष्ठो महाश्रेष्ठो तथैकादशवक्त्रमी ॥ ७७॥

सर्वेश्वरी पराकाली सुन्दरी सुरसुन्दरः ।
श्यामचञ्चुःपुटो दीप्तो रक्तनेत्रो भयङ्करः ॥ ७८॥

श्मशानवासी सर्वात्मा सैन्यस्तम्भनकारकः ।
सेनानीपूजितः पादौसेनापतिजयङ्करः ॥ ७९॥

फ्रों च्रीं क्लीं त्रूं तथा आं ह्लीं क्रों हूं फट् स्वरूपकः ।
कार्यकर्ता कार्यवक्त्रा कार्यसाधनतत्परः ॥ ८०॥

श्रीं ह्रीं श्रीं क्लीं पुनः क्रीं क्रीं स्वाहा दुष्टार्थखण्डनः ।
परब्रह्मस्वरूपात्मा आत्मतत्वमयः पुमान् ॥ ८१॥

विद्यातत्वमयोदेवो शिवतत्व स्वयंहरः ।
सर्वतत्वार्थतत्वात्मा कामिन्याकर्षणोहरः ॥ ८२॥

क्लैं क्लैं क्लूं म्लूं हसूं ह्लीं श्रीं श्रीं श्रीं क्रीं क्रीं फट्
परमं पदः ।
व्याधिहारी विहारीच क्रोधाद्राज्यविनाशनः ॥ ८३॥

रुधिराहारः सन्तुष्टो रक्तपः परमोव्ययः ।

पुरायात्मा पावनष्टात्मा कालभैरवभैरवः ॥ ८४॥

द्विजिह्वः पञ्चजिह्वाख्यो सप्तजिह्वः सनातनः ।
हूं हूं हूङ्कारचेतात्मा खें खें खण्डायुधान्वितः ॥ ८५॥

भ्क्लीं भ्क्लीं श्रीं ह्रीं ह्सौं क्लीं क्लीं ह्रीं हूं स्वाहा महाबली ।
कपाली कपिलाधारी क्रूं क्रूं क्रूं भगवान्भवः ॥ ८६॥

सिद्ध्यादिसेवितः श्रीं श्रीं ह्रौं ह्रौं स्वाहा जगन्मयः ।
चिन्मयश्चित्कलाकान्तः चैतन्यात्मा प्रतापयुक् ॥ ८७॥

कूं व्रूं ह्रूं श्रूं ह्सौं हौं हौं ॐ शिवाय नमः पदम् ।
त्रिनेत्रः परमानन्दो ह्रीं फट् स्वाहा सुरोवरः ॥ ८८॥

वरदो वरदाधीशो वायुवाहनवाहकः ।
वृषभारूढसर्वात्मन् हूं हूं हूं परमेश्वरः ॥ ८९॥

श्रीं ह्रीं ह्रीं ह्रीं ह्रौं क्रीं ह्रीं श्रीं श्रीं स्वाहामयो गुरुः ।
बृहस्पतिस्वरूपात्मा इन्द्रात्मा चन्द्रशेखरः ॥ ९०॥

चन्द्रचूडश्चन्द्रधारी चन्द्रार्द्धकृतशेखरः ।
ताम्बूलचर्वणीधाता रक्तदन्तः सुरोहितः ॥ ९१॥

कङ्कालधारी मुण्डात्मा रुण्डमालाधरः शिवः ।
व्याघ्राम्बरधरोधाता हर्ता संसारसागरः ॥ ९२॥

यमराज भयत्रासनाशनः सर्वकामुकः ।
भ्रष्टकर्ता सुरद्वेष्टा ये देवानाम्भयकरः ॥ ९३॥

सङ्ग्रामवारी धर्मात्मा सङ्ग्रामोजयवर्द्धनः ।
राजद्वारे सभामध्ये राजराजेश्वरः शिवः ॥ ९४॥

ह्रीं क्लैं क्लीं क्लूं ह्स्प्रें ऐं मोहनः सर्वभूभुजाम् ।
विश्वरूपो विशाम्भोक्ता योगोष्टाङ्गनिषेवितः ॥ ९५॥

जयरुद्र महाभाग वीरवीराधिपोज्ज्वलः ।
ऐं फट् ह्रीं फट् शिवः त्रीं फट् क्रीं फट् हूं फट् करः परः ॥ ९६॥

भस्मासुरेन्द्रवरदो भस्मासुरविनायकः ।
पञ्चावानवनाथात्मा षडधारमयोहरः ॥ ९७॥

षड्दर्शनसमोपुण्यः श्रीं ह्रीं क्लीं पुण्यदर्शकः ।
अकारादिक्षाकारान्तो वर्णमात्रार्थमात्रकः ॥ ९८॥

आं आं ईं ईं ह्लौं ह्रीं श्रीं सौः शिवः पापखण्डनः ।
ज्रां क्लीं ज्लूं क्लीं ह्सौं सौं हौं श्रीं स्वाहा ईशः परात्मनः ॥ ९९॥

एकाहिकोद्व्याहिकश्चतृतीयश्चचतुर्थकः ।
सर्वज्वरहरोदर्को ज्वरबाधानिवारणः ॥ १००॥

राजचोराग्निबाधाच ह्रीं ह्रूं शमनकारकः ।
च्रीं ह्स्प्रें ह्रौं ह्रीं ह्सौं ह्रीं फट् स्वाहा शङ्करशङ्करः ॥ १०१॥

महाराजाधिराजश्च राजराजोखिलेश्वरः ।
क्रीं छ्रौं ह्रीं फट् शिवायेति शरभाय नमोनमः ॥ १०२॥

भीषणोयत्रिशाशाखाय आदिमध्यान्तवर्जितः ।
आदिविद्या महाविद्या क्लीं छ्रीं ह्रीं खैं ह्स्प्रें हरः ॥ १०३॥

हूं हूं स्वाहा अमेयात्मा वरदो वरदेश्वरः ।
निष्कलङ्को वेदवक्ता वक्ताशास्त्रस्यबुद्धिमान् ॥ १०४॥

कर्ता कारणमीशानो भूर्भुवःस्वः स्वरूपकः ।
कुलमार्गरतः कौलः कौलिकानां धनप्रदः ॥ १०५॥

सुखराशिनिधानात्मा विज्ञानघनसाधनः ।
कालौकल्मषहर्तात्मा दुष्टम्लेच्छविनाशनः ॥ १०६॥

हूं खें खें खें ह्रीं ह्सौं हौं श्रीं क्लीं च्रीं ह्रीं ह्रीं नमोनमः ।
स्वाहा सर्वाममाचारी विचारी परमेश्वरः ॥ १०७॥

काशिमायातथाऽयोध्या मथुराकान्त्यवन्तिका ।
निवासीसर्वतीर्थात्मा कोटितीर्थ पदाश्रयः ॥ १०८॥

गङ्गासागरसिन्धुश्च प्रयागोपुष्करप्रियः ।
नैमिषीमैविषारण्यां नैमिषारण्यवासिनः ॥ १०९॥

पुष्करी पुष्कराध्यक्षो कुरुक्षेत्री च कौरवः ।
गोदावरीगयाचैव श्रीगिरिः पर्वताश्रयः ॥ ११०॥

गुहानिवासी भगवान् शरभः कमलेक्षणः ।
नृसिंहगर्वहर्तात्मा शुद्धाचाररतः सदा ॥ १११॥

सर्वधर्ममयोधीरोन्सर्वदेवमयः शिवः ।
ह्रीं फट् क्रीं फट् नमः खें फट् मन्त्रानां सिद्धिसम्पदः ॥ ११२॥

इतिनाम्नां सहस्राख्यां शरभस्य महात्मनः ।
पूजाकाले निशिथे च मध्याह्ने प्रपठेत्प्रिये ॥ ११३॥

प्रातःकाले व सन्ध्यायान्सभवेत्सम्पदापदम् ।
भौमावस्याचतुर्दश्यां संक्रान्तौ  तौरविभौमयोः ॥ ११४॥

पठेद्भक्तिसंयुक्तो तस्य सिद्धिर्नसंशयः ।
शनिमङ्गलवारे च उर्ध्वदृष्टिः पठेन्नरः ॥ ११५॥

सभवेत्पार्वतीपुत्रो सर्वशास्त्रविशारदः ।
राजानौदासतां यान्ति भवेत्सर्वजनप्रियः ॥ ११६॥

असिताङ्गोरुरुश्चण्डो क्रोधश्चोन्मत्तभैरवः ।
कपालीभीषणश्चैवस्वयम्भैवभैरवः ॥ ११७॥

ये ये प्रयोगास्तन्त्रेषु नैस्तैसाधय यत्फलम् ।
तत्फलं लभतेसक्षिप्रं नामसाहस्रपाठतः ॥ ११८॥

भूतप्रेतपिशाचश्च वेतालासिद्धिचेटकाः ।
ते सर्वे विलयं यान्ति साधकस्यास्य दर्शनात् ॥ ११९॥

सिंहाऋक्षावानराश्च व्याघ्रान्सर्पावराहकाः ।
गजोष्ट्राक्रूरसत्वाश्रयेचान्येविषधारिणः ॥ १२०॥

ते सर्वे विलयं यान्ति साधकास्यास्य दर्शनात् ।
अष्टम्यां वा चतुर्दश्यां नवम्यां गुरु संयुतम् ॥ १२१॥

पूजयेत्परयाभक्त्या सभवेत्सम्पदापदम् ।

यो निन्दां कुरुते नित्यं नामसाहस्रपाठके ॥ १२२॥

ते दुष्टा नाशया यान्ति स्वकर्मस्यापराधतः ।
मोहनस्तम्भनाकर्षमारणोच्चाटनादिकम् ॥ १२३॥

पाठमात्रेणसिद्ध्यन्ति देतत्सत्यं न संशयः ।
श्मशानाङ्गारमाहृत्य सपर्या कुजवासरे ॥ १२४॥

साध्यनामलिखेन्मध्ये पीतसूत्रेणवेष्टयेत् ।
निःक्षिपेच्छत्रु भवनेतस्य नश्यन्ति सम्पदः ॥ १२५॥

पुत्रनाशं कीर्तिनाशं धननाशं गृहक्षयम् ।
क्षयः सर्व कुटुम्बानां भूयात्सत्यं न संशयः ॥ १२६॥

गोपनीयमिदं तन्त्रं सद्यः प्रत्ययकारकम् ।
न देयं यस्य कस्यापि दत्वा सिद्धि क्षयो भवेत् ॥ १२७॥

स्वमातृयोनिवद्गोप्यं विद्यैषे त्यागमाजगुः ।
पठनीयमिदं नित्यं आत्मनाश्रेयमिच्छता ।
न मुञ्चतिगृहं तस्याल्लक्ष्मीवाणी सदैवहि ॥ १२८॥

॥ इतिश्रीआकाशभैरवकल्पे उमामहेश्वरसंवादे
शरभेश्वरसहस्रनामस्तोत्रं सम्पूर्णम् ॥